भव शंकर देशिक मे शरणम्

# पंचदेव पूजन सर्वाधिकार



विधि निर्माता - श्री कृष्ण तिवारी

स्वीकृति कर्ता - आचार्य अनुपम जी

सामान्य पंचदेव पूजन

हाथ में पुष्प-अक्षत लेकर प्रारम्भ में भगवान गणेशजी का स्मरण करना चाहिये -

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥

श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातृपितृचरण-कमलेभ्यो नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

पूजन संकल्प --

विष्णवे नमः, विष्णवे नमः, विष्णवे नमः ऐसा तीन बार कहकर जिस भी उद्देश्य से पूजा कि जा रही हो वह मन में कहे और पूजन का संकल्प लेवे ।

भगवान शिव का ध्यान करे--

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

ध्यानार्थे अक्षतपुष्पाणि समर्पयामि, शिवाय नमः ।
अक्षत पुष्प भगवान शिव के समक्ष रख देवे ।

भगवान विष्णु का ध्यान करे --

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं चक्रं
बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभै- दीप्तं विश्वधरं
स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥

ध्यानार्थे अक्षतपुष्पाणि समर्पयामि, विष्णवे नमः ।
अक्षत-पुष्प भगवान विष्णु के समक्ष रख देवे ।

भगवान सूर्यका ध्यान --

रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान् दधतं कराब्जै-
माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ।।
ध्यानार्थे अक्षतपुष्पाणि समर्पयामि, श्रीसूर्याय नमः ।

भगवान गणेश का ध्यान करे --

खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं वन्दे शैलसुतासुतं
गणपतिं सिद्धिप्रदं कामदम् ॥
ध्यानार्थे अक्षतपुष्पाणि समर्पयामि, श्रीगणेशाय नमः ।
अक्षत-पुष्प भगवान गणेश के समक्ष रख देवे ।

भगवती दुर्गा का ध्यान करे --

सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता |आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीरणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥
ध्यानार्थे अक्षतपुष्पाणि समर्पयामि श्रीदुर्गायै नमः ।

आसन ---

मंत्र पढ़ते हुए, एक-एक पुष्प प्रत्येक देवता के समक्ष रखते जाए --
मन्त्र-- अनेकरत्नसंयुक्तं नानामणिगणान्वितम्। कार्तस्वरमयं दिव्यमासनं परिगृह्यताम् ॥ शिवाय नमः/विष्णवे नमः/ श्रीसूर्याय नमः/ श्री गणेशाय नमः / श्रीदुर्गायै नमः......
आसनार्थे पुष्पाणि समर्पयामि ।

स्नान -
मंत्र पढ़ते हुए स्नान कराये, यदि चित्रपटल हो तो जल छिड़क देवे, चित्रपटल पर स्नान कराना अनिवार्य नहीं है ।

मन्त्र -
मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् । तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम् ॥
श्रीभगवते साम्बशिवाय नमः/ विष्णवे नमः/ श्रीसूर्याय नमः / श्री गणेशाय नमः /श्री दुर्गायै नमः......स्नानीयं जलं समर्पयामि ।

फिर आचमन जल समर्पित करना है आचमनी से और यदि आचमनी ना हो तो कुशा से......
आचमन मंत्र -स्नानान्ते आचमनीयं जलं समर्पयामि ।

अथ पंचोपचार विधि --- 1) गन्ध 2) पुष्प 3) धूप 4) दीप और 5) नैवेद्य.....

गन्ध यानि की सुगन्धित मलय चन्दन आदि लगाना है निम्न मन्त्र से मलय चन्दन लगाना है ---

श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥
श्रीभगवते साम्बशिवाय नमः/विष्णवे नमः/ श्रीसूर्याय नमः / श्री गणेशाय नमः /श्रीजगदम्बायै दुर्गादेव्यै नमः.....चन्दनानुलेपनं समर्पयामि ।

भगवती को यदि सिन्दूर चढ़ाना हो तो निम्न मन्त्र से चढ़ाये

सिन्दूरमरुणाभासं जपाकुसुमसन्निभम्।
अर्पितं ते मया भक्त्या प्रसीद परमेश्वरि ॥
श्रीजगदम्बायै दुर्गादेव्यै नमः । सिन्दूरं समर्पयामि ।

भगवान शिव को अक्षत निम्न मन्त्र से चढ़ाये --

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ श्रीभगवते साम्बशिवाय नमः । अक्षतान् समर्पयामि ।

यदि बिल्वपत्र चढ़ाना हो तो निम्न मन्त्र से चढ़ाये --

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुतम् । त्रिजन्मपापसंहारं बिल्वपत्रं शिवार्पणम् ॥
श्रीभगवते साम्बशिवाय नमः/श्रीजगदम्बायै दुर्गादेव्यै नमः.... । बिल्वपत्रं समर्पयामि ।

फिर भगवान गणेश, भगवान शिव और भगवती दुर्गा को निम्न मंत्रो से दूर्वा चढ़ाये --

भगवती दुर्गा को इस मन्त्र से दूर्वा चढ़ाये ----

(तृणकान्तमणिप्रख्यहरिताभिः सुजातिभिः । दूर्वाभिराभिर्भवतीं पूजयामि महेश्वरि ॥ श्रीजगदम्बायै दुर्गादेव्यै नमः । दूर्वाङ्कुरान् समर्पयामि)

भगवान शिव को इस मन्त्र से दूर्वा चढ़ाये --

(दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान्। आनीतांस्तव पूजार्थं गृहाण परमेश्वर ॥ श्रीभगवते साम्बशिवाय नमः । दूर्वाङ्कुरान् समर्पयामि)

भगवान गणेश को इस मन्त्र से दूर्वा चढ़ाये --

(दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान्।
आनीतांस्तव पूजार्थं गृहाण गणनायक ॥ दुर्वाङ्कुरान्
समर्पयामि । )

भगवान विष्णु को तुलसी और मंजरी इस मन्त्र से चढ़ाये
--

(तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।
भवमोक्षप्रदां रम्यामर्पयामि हरिप्रियाम् ॥ विष्णवे नमः,
तुलसीदलं तुलसीमञ्जरीं च समर्पयामि। )

निम्न मन्त्र से धूप दिखाए --

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
निम्न मन्त्र से दीप दिखाए --
साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृह्णन्तु देवेशास्त्रैलोक्यतिमिरापहम् ॥
श्रीभगवते साम्बशिवाय नमः/विष्णवे नमः/ श्रीसूर्याय नमः
/ श्री गणेशाय नमः /श्रीजगदम्बायै दुर्गादेव्यै नमः...
धूपमाघ्रापयामि ।

निम्न मन्त्र से दीप दिखाए --

साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृह्णन्तु देवेशास्त्रैलोक्यतिमिरापहम् ॥
श्रीभगवते साम्बशिवाय नमः/विष्णवे नमः/ श्रीसूर्याय नमः / श्री गणेशाय नमः /श्रीजगदम्बायै दुर्गादेव्यै नमः.... धूपमाघ्रापयामि ।

अब निम्न मंत्रो से नैवेद्य अर्पित करे --

शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।
आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥
नैवेद्यं निवेदयामि । (मन में सभी देवताओं का स्मरण करे और सभी को भोग लगा दे । भगवान विष्णु के नैवेद्य में तुलसीदल अवश्य डाले और भगवती के नैवेद्य में तुलसी दल ना डाले, अर्थात दो या दो से अधिक पात्रों में अलग अलग देवों के लिये नैवेद्य रखकर समर्पित करे । )
नैवेद्य के बाद निम्न मंत्रो से आचमन करने के लिये जल चढ़ाये और मुख प्रक्षालन के लिये तथा हस्तप्रक्षालन के लिये जल दे ।

मन्त्र -

नैवेद्यान्ते ध्यानं ध्यानान्ते आचमनीयं जलं समर्पयामि ।
मध्येपानीयम्, उत्तरापोऽशनार्थं हस्तप्रक्षालनार्थं
मुखप्रक्षालनार्थं च जलं समर्पयामि ।

कर्पूर से आरती करे --

मन्त्र --
कदलीगर्भसम्भूतं कर्पूरं तु प्रदीपितम्। आरार्तिकमहं कुर्वे
पश्य मां वरदो भव ॥ आरार्तिकं समर्पयामि ।
फिर लौकिक आरतीयाँ जो प्रसिद्ध हैं उनसे आरती करे ।

फिर मन्त्रपुष्पान्जली निम्न मंत्रो से अर्पित करे --

श्रद्धया सिक्तया भक्त्या हार्दप्रेम्णा समर्पितः ।
मन्त्रपुष्पाञ्जलिश्चायं कृपया प्रतिगृह्यताम्॥

फिर अपने इष्टदेवता के स्तोत्रों का पाठ करे

फिर निम्न मंत्रो से क्षमा याचना करे-

मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मया देव! परिपूर्णं तदस्तु मे ॥
आवाहनं न जानामि न जानामि विसर्जनम्
। पूजां चैव न जानामि क्षमस्व परमेश्वर ॥
अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात् कारुण्यभावेन रक्ष मां परमेश्वर ॥

फिर 11 माला नाम जप करे |

फिर प्रसाद ग्रहण करे

नारायण